# संस्कृत-वार्ताः

**दिनाङ्कः** 22-12-**2020**

**प्रातः** - 06: 55

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी अलीगढ-मुस्लिम-विश्वविद्यालस्य शताब्दी समारोहं दृश्य-श्रव्यान्तर्जालीय माध्यमेन सम्बोधयिष्यति।
- प्रधानमन्त्रिण: नरेन्द्रमोदिन: ऐषम: भारतीये अन्ताराष्ट्रिय-विज्ञानोत्सवे अद्य दृश्यश्रव्य माध्येन औद्याटनिकं सम्भाषणम्।
- जम्मूकश्मीरे ऐदं प्राथम्येन आयोजितेभ्य: जनपद् विकास-परिषद: अशीत्यधिक-द्विशतं आसनेषु निर्वाचनेभ्य: अद्य छन्दाकलनम्।
- कोविड-19 इति वैश्विक संक्रमणस्य प्रत्यवाप्तिमिति विवर्ध्य पंच त्रीणि दशमलवोत्तर पंच नवति संवृत्ता, षण्णनवति लक्षाधिका: जना: आहत्य स्वस्थीभूता:।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

- **मुखावरंक सन्धारयन्तु** –
- **सामाजिकदौर्यं परिपालयन्तु**,
- **पाणिपादं च यथासमयं प्रक्षालयन्तु। वार्ता: विस्तर**

**पीएम एएमयू**

प्रधानमन्त्री नरेन्द्र मोदी अद्य प्रात: एकादश वादने दृश्य-श्रव्य परान्तर्जालीय माध्यमेन अलीगए-मुस्लिम-विश्वविद्यालयस्य शताब्दीसमारोहं सम्बोधयिष्यति। अवसरेऽस्मिन् श्रीमोदी एकं प्रैषपत्रमपि प्रख्यापयिष्यते। अवसरेऽस्मिन् तत्रत्य कुलाधिपतिपदम् अलंकुर्वाण: एस्. एम्. सैफुद्दीन अपि च केन्द्रीय-शिक्षा-मन्त्री डॉ. रमेश-पोखरियाल-निशंकोऽपि सम्मिलितो भविष्यत:।

**पीएम आई.आई.एस्.एफ्**

प्रधानमन्त्री श्री नरेन्द्रमोदी अद्य दृश्य-श्रव्य परान्तर्जालीय माध्यमेन ऐषमो भारतीये अन्ताराष्ट्रिय-विज्ञानोत्सवे आद्यद्घाटनिकं भाषणं करिष्यति। अवसरेऽस्मिन् केन्द्रीय विज्ञान प्रौद्योगिकमन्त्री डॉ. हर्षवर्धनोऽपि उपस्थितो भविष्यति इति। अवधेयास्पदें तथ्यमिदं यत् अस्य शताब्दस्य पंचदशे वर्षे समाजे वैज्ञानिकस्वभावं विवर्धयितुं विज्ञान-प्रौद्योगिक-पृथ्वी-विज्ञान मन्त्रालयेन 'विजन भारती' इत्यनया सह योजनेयं प्रारब्धा आसीत। अवधेयं अस्य प्रमुखोद्देश्यं सामान्यजनै: साकं विज्ञानं योक्तुं, विज्ञानोत्सवं परिपालनं अपि विज्ञान-प्रौद्योगिक-अभियान्त्रिक-गणितीयेषु च विषयेषु महदानन्दो विद्यते इति दर्शनम् वर्तते।

**पीएम वियतनाम**

प्रधानमन्त्रिणा श्रीमोदिना ह्य: सायं वियतनाम देशीयेन प्रधानमन्त्रिणा नुएन युआन फुक इत्यनेन साकं शिखरसम्मेलनं समनुष्ठितम्। उभाभ्यां अपि नेतृीयां द्विपाक्षिक-सम्बन्धानां सम्पूर्ण-समीक्षा विहिता। एतदतिरिच्य व्यापकरूपेण द्विपाक्षिक-क्षेत्रीय-वैश्विक-विषयेषु च चर्चा: विहिता:। प्रारम्भिके स्वीये सम्बोधने प्रधानमन्त्रिणा मोदिना अवादि यत् वियतनामदेश: भारतस्य एक्ट ईस्ट इति दक्षिणपूर्वीय-राष्ट्रनीतौ महत्त्वपूर्ण स्तम्भरूपेण हिन्द प्रशान्तदृष्ट्या च प्रमुख-सहयोगीत्वेन वर्तते। अमुना प्रत्यपादि यत् भारत-वियतनामदेशयोर्मध्ये सम्बन्धा: व्यापकरूपेण विवर्धन्ते इति। प्रधानमन्त्री मोदी स्पष्ट्यकरोत् यत् आगामिवर्षे उभौ देशौ संयुक्तराष्ट्र-सुरक्षा परिषद: सदस्यत्वं अवाप्स्यत:, अनेन उभयो: सहयोग: अतोऽपि सुदृढो भविष्यति इति।

**जम्मूकश्मीर चुनाव**

ऐदं प्रथम्येन केनद्रशासिते जम्मू-कश्मीर राज्ये समायोक्ष्यमाणाय अशीत्यधिक-द्विशतं जनपद्-विकास-परिषद: निर्वाचनाय अद्य छन्दाकलनं विधीयते। एतदर्थं सर्वा: सज्जता: सन्ति सम्पूरिता: इति।

**कोविड-19**

कोविड-19 इति वैश्विकसंक्रमण-स्वस्थतामिति: विवर्ध्य पंच त्रीणि दशमलवोत्तर-पंचनवति प्रतिशतं यावत् अंकिता। विगते अहोरात्रो पंचविंशति सहस्राधिका: जना: स्वस्थीभूता:। अनेन सहैव षण्णनवति लक्षंख्यातोप्यधिका: जना: स्वास्थ्यलाभं अवाप्तवन्त: इति।

**।। इति वार्ता: ।।**